# काश्मीर-क्रन्दनम्

( जम्मू-काश्मीर राज्ये आतङ्कवाद जन्य दुःस्थिति वर्णनम् )


रचयिता

डॉ० बदरीनाथ कल्ला ( राष्ट्रपति सम्मानितः

शास्त्री, बी०एड० एम०ए० एम०ओ०एल०

पी-एच०डी० (संस्कृत-भाषाविज्ञान), साहित्याचार्य (

विस्थापितः कश्मीरी पण्डितः

Professor Dr. Badrinath Kalla
Former Sanskrit Professor,
Post Graduate Deptt. of Sanskrit,
The University of Kashmir,
Srinagar (Kashmir)


( संस्कृति संस्कृत-प्रचाराय निःशुल्क-वितरणम् )

# दो शब्द—इतिहास के परिप्रेक्ष्य में

दुनिया में 'भूस्वर्ग' होने का गौरव केवल कश्मीर को ही प्राप्त हुआ है। हाय! इस स्वर्ग समान घाटी को गत आठ वर्षों से मुस्लिम कट्टरपंथी आतंकवादियों ने नरक में तबदील कर दिया है। इस समय वहाँ चारों ओर आतंक छाया हुआ है। आतंकवादियों के अत्याचार के कारण कश्मीर से शान्तिप्रिय तथा सहिष्णु कश्मीरी पण्डितों को पलायन करने के लिए विवश होना पड़ा है। फलतः इस समय लाखों की संख्या में वे भारत के विभिन्न राज्यों में कठिनाई में कालयापन कर रहे हैं।

विडम्बना तो यह है कि पाँच हज़ार वर्षों से रहने वाली जाति को (हिन्दुओं को) प्रायः सात सौ साल से रहने वाली जाति (मुसलमानों) ने उनकी निर्मम हत्या करके बन्दूक की नोंक पर उन्हें मूल स्थान से निकाल दिया।

यदि इतिहास की ओर देखा जाये तो विश्वासघाती शाहमीर द्वारा कश्मीर की अन्तिम शासिका कूटारानी की हत्या के बाद कश्मीर का शासनचक्र दमनचक्र में बदल गया। सुलतान-युग १३३९ ई० से १८१९ ई० तक चलता रहा। शाहमीरी युग, चक युग तथा अफगान युग आदि में हिन्दुओं को अमानवीय यातनाएँ सहन करनी पड़ीं। मध्यकालीन इतिहासकार जोनराज के अनुसार—"जिस तरह टिड्डियाँ फसल को नष्ट करती हैं, आँधी व तूफान वृक्षों को उखाड़ देते हैं, उसी तरह यवनों ने कश्मीर के देशाचार को अर्थात् संस्कृति को नष्ट कर दिया।" (जोनराज राजतरङ्गिणी—श्लोक नं. ५७५)। इन अमानवीय घटनाओं की पुष्टि फारसी इतिहासकारों ने भी की है। फिरिश्ता के अनुसार "हिन्दू-विरोधी नीति के कारण ब्राह्मणों ने आत्महत्याएँ कीं। कुछ पलायन के लिए मजबूर हुए।" (फिरिश्ता-II ३४१)

आजादी के पश्चात् सालों के बाद जो दुर्दशा कश्मीरी हिन्दुओं की आजाद हिन्दुस्तान में हुई है, उसका मूल कारण केन्द्र सरकार की तुष्टीकरण नीति तथा कश्मीर के शासकों की दमन नीति है। स्वार्थी, आचारभ्रष्ट, भ्रष्टाचारलिप्त, पदलोलुप तथा दिशाहीन नेताओं के सत्ता में आने से कश्मीर का वातावरण विषाक्त हो गया है। मस्जिदों में इमामों तथा नेताओं के भारत विरोधी दुष्प्रचार से पाक समर्थकों का उत्साह बढ़ गया है। अब इस स्थिति में इस जहरीले माहौल को कौन सुधार सकता है। इस पर प्रश्नचिह्न लग गया है।

महात्मा गांधी को कश्मीर में रोशनी की जो किरण दिखाई देती थी, अब वह अंधकार में बदल गई है। क्या विस्थापित कश्मीरी पण्डित पुनः सम्मान तथा शान्ति के साथ कश्मीर में रह सकेंगे? क्या कश्मीर में राष्ट्रविरोधी तत्त्व ख़त्म हो जाएँगे? ये गम्भीर तथा विचारणीय प्रश्न हैं।

'काश्मीर क्रन्दनम्' नामक इस लघुकाव्य में मैंने कश्मीर की इसी त्रासदी का वर्णन संक्षिप्त रूप में किया है। आशा है कि इससे पाठकों को कश्मीर के मध्यकालीन इतिहास को पढ़ने की रुचि बढ़ेगी तथा वे कश्मीर के अतीत व वर्तमान से परिचित होंगे॥

—बदरीनाथ कल्ला
कल्लट वंशजः

तस्मिन् काले बुधाः सर्वे मौसलोपद्रवाकुलात् ।
पुस्तकानि गृहीत्वा ते ययुर्देशं दिगन्तरम् ॥
(जोनराज - राजतरङ्गिणी से

## काश्मीर क्रन्दनम्

अहो सुन्दरमुद्यानं कुङ्कुमपुष्पवासितम् ।
वसन्ततौ कथं नष्टं झञ्झावातेन सांप्रतम् ॥

कीदृशी वाटिका रम्या पुष्पमाला विभूषिता ।
अनभ्रवज्रपातेन शोभा ह्यस्या अपाहृता ॥

शृणुध्वं दारुणं वृत्तं दुःखदं प्राणहारकम् ।
कश्मीर पण्डितानां हि, लोकानां त्रासदायकम् ॥

एकदा यवनाः सर्वे मस्जिदेषु समाकुलाः ।
भारतस्य निरोधाय मन्त्रणां चक्रुरुन्मदाः ॥

योजनाबद्धरूपेण चक्रुःषड्यन्त्रकं पुनः ।
पलायनाय हिन्दूनां बहिः कश्मीरमण्डलात् ॥

घटनामत्र घटितां श्रावये सुजनानहम् ।
श्री सर्वानन्द कौलस्य 'प्रेमी' संज्ञोपधारिणः ॥

एकदा रजनीकाले आगताः शस्त्रधारिणः ।
सर्वानन्दं समाहूय निन्युस्तं बलपूर्वकम् ॥

जनकस्य तु साहाय्यं कर्तुं पुत्रोऽपि निर्गतः ।
यातनां लब्धवान् सोऽपि घोरां मर्मन्तुदां किल ॥

ततोऽङ्गानि छित्वा ते रुधिरैर्भरितानि च ।
चिक्षिपुर्धान्यक्षेत्रेषु घातका देशद्रोहिणः ॥

टीकालालस्तु वाक्कीलः निर्भयो धर्मरक्षकः ।
मारितो गुलिकैर्दुष्टैः रथ्यायामेव निर्गतः ॥

गंजू श्रीनीलकण्ठोऽसो न्यायाधीशो विघातितः ।
पाषाण सदृशो धीरो लोकानां हितकारकः ॥

'ल्हासाकौला'ख्य विद्वांसं दूरदृश्यनिदेशकम् ।
जघ्नुस्तं स्वगृहद्वारे जाल्मा आतङ्कवादिनः ॥

सर्वान्

* 'नन्दीग्राम' स्थितान् जघ्नुरातङ्कवादिनः ।
त्रिचतुर्भिः सह सुतान् दुर्जना आततायिनः ॥

दीनानाथमुपाध्यायं 'मुजू' जात्याङ्कितं तथा ।
जघ्नुस्तं भवने स्वीये रात्रावातङ्कवादिनः ॥

कन्यामेकामपाहृत्य बलात्कारं विधाय तैः ।
क्रकचैः खण्डशः कृत्वा तच्छरीरं विकीर्णितम् ॥

आतङ्कवादसंत्रस्ताः पुरग्रामादिवासिनः ।
पलायिता द्रुतं सर्वे नग्नपादास्तु हिन्दवः ॥

निधिं चलाचलं त्यक्त्वा दायादैः परिवर्द्धिताम् ।
कांदिशीका ययुः सर्वे पण्डिताः दुष्टखण्डिताः ॥

जीवहत्या व्रतं येषां ताडनं मारणं तथा ।
कथं वासो हि तत्र स्यादहिंसाव्रतवर्तिनाम् ॥

कालः कथं हि तैर्नेयः रथ्यासु शिविरेषु वा ।
काश्मीरिकैर्बुधैर्दीनैः यावनी यातनाकुलैः ॥

राज्यपालपदे श्रीमान् शास्ता श्री जगमोहनः ।
संरक्षणाय लोकानां शासनं च सुशासितुम् ॥

नियुक्तः सर्वकारेण श्रेष्ठोऽसौ कर्मकौशले ।
प्रशासने सुनिपुणे राज्यपालो महान् सुधीः ॥

साहसी त्यागशीलश्च नीतिशास्त्र विशारदः ।
समुद्र इव गंभीरः हिमाद्रिरिव निश्चलः ॥

निर्भयो निरहङ्कारः कर्मठः शुभचिन्तकः ।
श्रुत्वा तन्नाम सर्वत्र यावनीं वृत्तिमाश्रिताः ॥

तद् विरुद्धां मतिं चक्रुः दुष्टाः पाकसमर्थकाः ।
"राजीवं"[1] पत्रमलिखित् राज्यपालः स तत्क्षणम् ॥

न ध्यानमददत् केन्द्रं तुष्टीकरणकारणात् ।
तुष्टीकरणनीतिर्हि ध्रुवं राष्ट्रविघातिनी ॥

तस्मादेषा परित्याज्या कांग्रेसपक्षधारिभिः ।
परं कांग्रेस नेतारः क्षुद्रस्वार्थपरायणाः ॥

---

१. भारतस्य तत्कालीनं प्रधानमन्त्रिणाम् ।



* (एषा घटना कालान्तरे घटिता)

न त्यक्तवन्तस्तां नीतिं हा ! गर्दभनिमीलिकाः।
"वी.पी. सिंहेन"[1] मूढ़ेन पाखण्डव्रतधारिणा ॥

गुरुतुल्यामि'भामस्य' मत्वाज्ञां सर्वदुःखदां।
राज्यपालपदाद्धीनः कारितो जगमोहनः ॥

वी०पी० सिंहः क्षुद्रवुद्धिः स्वार्थसिद्धिपरायणः।
कठोरहृदयः क्रूरः धूर्तनीतिविशारदः ॥

परेषां क्षुद्रदोषाणां भूरिशः ख्यापनेन वै।
महामंत्रीपदं वाञ्छन् नैवात्मगुणसम्पदा ॥

मतानि दलितादीनां छलेन ग्रहणोत्सुकः।
बालानां बालिकानां वाप्यात्मदाहेऽपिनिष्कृपः ॥

अन्तर्द्रोहं प्रजनयन् प्रजासु शठनीतितः।
प्रशासनस्य सत्सूत्रं षड्भिर्मासैर्दूषयत् ॥

विश्वासं संसदः स्वस्मिन् विनष्टं ज्ञातवानपि।
नात्यजत् स्वं पदं लुब्धो यावन्न निकृतिं गतः ॥

मतदानस्य व्याजेन प्रतारयन्ति ये जनान्।
विश्वासो नैव कर्तव्यस्तेषां दुश्चरिते बुधैः ॥

एवं विधानां धूर्त्तानां नेतृणां शासने कथम्।
भवेत् प्रजानां कल्याणं यद्वा राष्ट्र समुन्नतिः ॥

'मुफ्ती सैयद' पीरेण राष्ट्रस्य गृहमंत्रिणा।
X· स्वकन्यामुक्तिव्याजेन विमुक्ताः पञ्चहिंसकाः ॥

महती विडम्बनैषा लोकरोमाञ्चकारिका।
कांग्रेसाध्यक्ष[2]'कारस्य' पुत्रो राष्ट्रस्य घातकः ॥

येषां धर्मं च लक्ष्यं च, केवलं लोकवञ्चनम्।
कथं ते पदभाजः स्यु भारते सुप्रतिष्ठिते ॥

स्वार्थसाधनसंलग्ना, ये नेतारो भुवि स्थिताः।
न ते वन्द्याः न ते वन्द्याः केवलं पदलोलुपाः ॥

---

१. परवर्ती भारत प्रधानमन्त्री। २. कश्मीर नेता।



X· 'स्वकन्या सईद'।

यावनं शासनं पूर्वं यातनाभिः प्रपूरितम् ।
कठोरं वर्णनातीतमार्यसंस्कृतिनाशकम् ॥

पुनरप्यनुभूतं तद् आर्यधर्मानुयायिभिः ।
कश्यपस्थापिते राज्ये शिवे कश्मीरमण्डले ॥

घोरस्यातङ्कवादस्य कथं जन्म बभूव हा !
मुनिभिराश्रिते देशे ऽहिंसापथप्रदर्शके ॥

शेखस्य पुत्रः 'फारुकः'[1] डाक्टरोपाधिसंज्ञकः ।
मुख्यमंत्रिपदत्वेन शशासेमं हि मण्डलम् ॥

कालस्तच्छासनस्यासीद् अन्धकारमयः खलु ।
लोकपीडनकालो हि हिन्दूनाञ्च विशेषतः ॥

तत्रैवातङ्कवादस्य प्रसारोऽभूत्समन्ततः ।
यवनाधिकृते देशे जनतादुःखवर्धके ॥

आतङ्कवादपुष्टिं वै चक्रेऽसौ निजभाषणैः ।
विमुक्ताः बन्दिनस्तेन क्रूरा आतङ्कवादिनः ॥

पाकस्याधिकृते क्षेत्रे लब्ध्वा शस्त्रप्रशिक्षणम् ।
गुप्तमार्गैः प्रविष्टास्ते शान्ते कश्मीरमण्डले ॥

लुण्ठनं द्रव्यजातानां दारापहरणं तथा ।
हिन्दूनां मारणं तेषां "धर्मयुद्धं" प्रकीर्तितम् ॥

"न भट्टोऽहं न भट्टोऽहं" नाद आवर्तितः पुनः ।
भारत मुकुटे राज्ये शिवे कश्मीर मण्डले ॥

यावने राज्यकाले या स्थितिरासीत्भयप्रदा ।
सा स्थितिर्हि पुनर्जाता हिन्दुधर्मस्य घातिका ॥

जनिं लब्ध्वा पुनर्देशे मूर्त्तिभेत्ता सिकन्दरः ।
नाशं चकार हिन्दूनां पुनः कश्मीर वासिनाम् ॥

महात्मा गांधिनो वाक्यमसत्यं प्रतिफलितम् ।
आशायाः किरणस्थाने नैराश्यं लभ्यतेऽधुना ॥

१. कश्मीरस्य नेता



काश्मीरे

कश्मीरी पण्डिता भट्ट

अभ्रंलिहानि हर्म्याणि दग्धानि यवनैरिह।
इन्द्रप्रसादतुल्यानि विस्मयोत्पादकानि हि॥

काश्मीर पण्डिता दीनाः भ्रमन्तीह सुदुःखिताः।
केन्द्रशासक दुर्नीत्याः फलमेतद् विशेषतः॥

सर्वं हि सह्यतेऽस्माभि स्ताडनं मारणं किल।
परं न सह्यतेऽस्माभिः कन्यापहरणं खलु॥

चिरमेषा न वै दृष्टा त्रासदा भयदा स्थितिः।
यस्यां वै यातनाभिस्ते घातिता हिन्दवः किल॥

"गलपाशा"दिरूपैश्च क्रूरैरातङ्कवादिभिः।
रोमाञ्चकारकैः कृत्यै र्घातिताः पण्डिताः किल॥

पतिपुत्रवियुक्तानां नारीणां रोदनं महत्।
मर्मन्तुदं प्राणहञ्च सर्वदुःखकरं किल॥

विस्मर्यन्ते कथं लोकैः घटनाः त्रासदायिकाः।
घटिताः यवनैः क्रूरै र्दुष्टैरातङ्कवादिभिः॥

स्वातन्त्र्येण हि भ्राम्यन्ति क्रूरा आतङ्कवादिनः।
ग्रामे ग्रामे प्रतिक्षेत्रं पूर्णे कश्मीर मण्डले॥
आश्रयं लभमानास्ते यवनानां गृहेषु च।
तेषां निरोधने नैव न सिद्धिं यान्ति सैनिकाः॥

कश्मीर पण्डितानां हि या स्थितिर्दृश्यतेऽधुना।
"फारूक"[1]स्यैव दुर्नीत्याः फलमेतद् विशेषतः॥

केन्द्रविरोधकरणं शत्रुनीतिसमर्थनम्।
शत्रूत्साहवर्धनञ्च फलमेतद् विशेषतः॥

आसीत् प्रसिद्धं यद् राज्यं स्वर्णमण्डल सन्निभम्।
नेतृणां तत्तु दुर्नीत्या भूतं नरकमण्डलम्॥

विरोधं नाकरोत् कोऽपि नेता आतङ्कवादिनाम्।
उत्साहं वर्धयामास भिन्नरूपैः सदैव वै॥

---

१. कश्मीर नेता

विद्रोहिणो मिलित्वा ते "अल्लाहटैगरा" दग: ।
सर्वे भारत विद्रोहं कुर्वन्ति हि दिवानिशम् ॥

पाकसंवर्धकैर्नादि निर्दयैर्मारिणैस्तथा ।
भीता: प्राणसुरक्षार्थं पण्डिता: प्रपलायिता: ॥

मस्जिदेषु हि सर्वेषु प्रचारो भवति खलु ।
विद्रोहिणां दुर्दुष्टानां नित्यं पाकहितैषिणाम् ॥

विलोक्य दुर्दशामेतां कस्य न द्रवितं मन: ।
शोकपङ्कनिमग्नानां हिन्दूनां सर्वथा किल ॥

उप्तं यैर्विषबीजन्तु लभेरंस्ते कथं सुधाम् ।
प्रमाद: खलु नेतृणां मूलकारणमुच्यते ॥

समुत्तिष्ठत मे पुत्रा: प्रिया भारतवासिन: ।
पूजां कुरुत शस्त्राणां देशधर्महिताय वै ॥

न संकोचो विधातव्यो ब्राह्मणेन कदाचन ।
शस्त्राणां हि प्रयोगाय धर्मसंरक्षणाय च ॥

शस्त्रपूजासमो धर्मो नास्ति जगति कश्चन ।
मन्वादिभिर्हि शास्त्रेषु रुपदिष्टं सदैव तत् ॥

प्रहिंसकानां हनने न दोषो विद्यते क्वचित् ।
सर्वे देशस्य रक्षार्थं कटिबद्धा भवन्तु वै ॥

उक्तं परशुरामेण शस्त्रे शास्त्रे च कौशलम् ।
स्वरक्षार्थं जनैर्धार्यं शत्रूणाञ्च विनाशकम् ॥

हिंसकानां वधेनैव साध्यते शान्तिरुत्तमा ।
"नाततायिवधे दोषो" मनु: स्वायम्भुवोऽब्रवीत् ॥

आर्यधर्मस्य नाशका यवनधर्मानुयायिन: ।
इतिहासेन जानन्ति देशविदेशवासिन: ॥

लज्जां वहति वै माता भारतस्य प्रतिष्ठिता ।
कुकृत्यं वीक्ष्य लोकानां कुमार्गे खलु गामिनाम् ॥

सन्ति मे केऽपि वै पुत्रा आतङ्कवादतत्परा: ।
घ्नन्ति लोकान् हि निर्दोषान् विभिन्नक्षेत्रसंस्थितान् ॥

वुद्धाशांकयो: सन्देशं साकारं कुरुत सदा ।
स्वतन्त्रे भारते देशे मानव धर्मरक्षके ॥

वादयत पुन: शङ्खं शान्तिनाददायकम् ।
राष्ट्रस्य हि विकासाय धर्मस्य रक्षणाय च ॥

क्व गतो दिव्य संदेशो लोकभीतिनिवारक: ।
ऋषीणाञ्च मुनीनाञ्च सज्ज्ञानस्य प्रदायक: ॥

प्रज्ज्वालयत वै दीपं ज्ञानमज्ञाननाशकम् ।
दायकं मङ्गलानां वै नित्यं सन्मार्ग दर्शकम् ॥

हिंसया रक्तपातेन दूयते मे मन: सदा ।
कुरुध्वं तादृशं कार्यं प्राणिनामार्त्तिनाशनम् ॥

ज्योतिरेकं हि सर्वत्र व्यापकं शाश्वतं सदा ।
ब्रह्माण्डे भाति तज्ज्योति रेकस्य पर ब्रह्मण: ॥

दिक्कालाद्यनवच्छिन्न - मनन्तममरं तथा ।
अलौकिकं ध्रुवं नित्यं कूटस्थमविकारि च ॥

न कदापि लयं याति सततं तिष्ठति ध्रुवम् ।
जगत्प्रलयकालेऽपि निर्बाधं भाति सर्वदा ॥

ज्योतिर्नेदं जडं ज्ञेयं नित्यं प्रकाशदायकम् ।
चैतन्यं शुद्धरूपञ्च ब्रह्मरूपं सदाचलम् ॥

शिवरूपं शक्तिरूपं चित्स्वरूपं तथैव च ।
काशरूपं विमर्शात्मा नन्दरूपं हि सत् सदा ॥

भातीदं समरूपं हि सर्वप्राणिषु सर्वदा ।
नेदं छिद्येत शस्त्रेण क्लेद्यते नापि वारिणा ॥

वातेन कम्पते नैव न वै बध्यते केनचित् ।
अजन्माखण्डरूपञ्च विश्वोत्तीर्णं हि व्यापकम् ॥

विश्वमात्मकमिदं ज्ञेयं सूक्ष्मरूपं सनातनम् ।
नेदं भास्वरवत्तप्तं न शीतांशुसमं जडम् ।।

अवर्ण्यमप्रमेयं तद् अन्वाख्यातं महर्षिभिः ।
कालातीतं गुणातीतं मायातीतं तथैव च ।।

सर्वे धर्माः समानाश्च न वैरं दृश्यतां क्वचित् ।
मानवोधर्म उत्कृष्टो मुनीनां वचनं त्विदम् ।।

मुनिभिः कथितं वाक्यं विस्मर्यं न कदाचन ।
इदं वाक्यं महावाक्यं जनकल्याणकारकम् ।।

आचार्यशङ्करादीनां मतमद्वैतवादिनाम् ।
शान्तिदं सुखदञ्चैव विश्वकल्याणकारकम् ।।

भेदभावं परित्यज्य समभावं निषेवत ।
सद्गतिं समभावेन लभन्ते मानवाः सदा ।।

ब्रह्मरूपमिदं सर्वं विश्वं स्थावरजङ्गमम् ।
मानवोधर्म उत्कृष्टो मुनिभिः परिकीर्तितः ।।

धर्मस्य लक्षणं प्रोक्तं युगधर्मस्य चालकैः ।
अहिंसा समता प्रीति विश्वबन्धुत्ववर्धिनी ।।

'अधर्मं धर्ममित्याहु र्जना अज्ञानकारणात् ।
अन्धकारमयं तेषां जीवनं गर्हितं सदा ।।

धर्माणां मूलतत्त्वेषु न भेदो दृश्यते क्वचित् ।
मानवधर्म उत्कृष्टो मुनीनां वचनं यथा ।।

तस्मात् सर्वैः प्रयत्नेन कर्तव्यं धर्मपालनम् ।
धर्मस्य पालनेनैव विश्वशान्तिर्हि निश्चिता ।।

परेषां हितलग्नास्तु ते यान्ति परमं पदम् ।
तेषां मतेन सर्वत्र वसुधैव कुटुम्बकम् ।।

उत्तिष्ठत जागृत प्राप्य वरान्निबोधत ।
विवेकानन्द दृष्टि हि पालनीया सदा बुधैः ।।

सर्वेषु प्राणिषु श्रेष्ठो मानवो हि प्रकीर्तितः ।
रचनात्मक कार्याणि करोतु मानवः सदा ॥

राष्ट्रभक्ता राष्ट्रवीरा राष्ट्रगौरववर्धकाः ।
वन्द्यास्ते जगति लोका आदर्शचरितात्मनः ॥

मद्वचः पालनं कुर्यात् यदा हि मानवो भुवि ।
अवाप्स्यति तदा शान्ति नात्र कोऽपि हि संशयः ॥

मातास्हं वै क्षमाशीला सर्वलोकहिते रता ।
न सह्यते मया हिंसा दुष्टदानवचालिता ॥

शान्तिभङ्गकरा हिंसा निन्द्यते साधुभिः सदा ।
तस्मादेषा विनाश्यैव मनसा कर्मणा तथा ॥

उत्तिष्ठताधुना पुत्राः शान्तिभेरी प्रघोषकाः ।
शपथं कुरुतेदानी देशस्याखण्डता कृते ॥

क्षिप्रं प्रोञ्छयताश्रूणि दुःखितानां सहर्षकम् ।
पुरुषाणां स्त्रीणाञ्च दलितानां तथैव च ॥

कण्टकाकीर्ण मार्गोऽयं विषमो गहनः किल ।
कण्टककर्मणोनैव प्रमदितव्यं कदाचन ॥

उप्यन्तां 'पद्मपुष्पाणि'* कोणे कोणे पदे पदे ।
येषां सुवाससा सर्वे दृश्येयुः सर्वदा जनाः ॥

जातिभेदेऽप्यभिन्नैस्तु उप्यतां भारते जनैः ।
स्नेहसद्भावयुक्तैस्तु भिन्नधर्मानुयायिभिः ॥

प्रादुर्बभूव स्वर्देवी सहसाश्चर्यकारिणी ।
दिव्याम्बरधरा लोके धृतकुङ्कुममस्तका ॥

भारतमातरं देवी पप्रच्छ विनयेन सा ।
श्रुतं मया हि स्वर्लोके लोकानां क्रन्दनं महत् ॥

किमस्य कारणमस्ति संक्षिप्य वद मे प्रिये ।
श्रृणु देवि प्रवक्ष्यामि लोकदुर्गतिकारणम् ॥

---

* कश्मीरी भाषायां 'पम्पोश' (कमलम्)

भारतवासिभिर्लोकै विस्मृतं वचनं सताम्।
त्यागभाव विहीनानां स्वार्थसाधनसेविनाम् ॥

जायते दुर्बलो देशो नेतृणां कलहेन च।
दृश्यते सर्वतो हिंसा आतङ्कैस्तु समुत्थिता ॥

स्वतन्त्रे भारते शास्तिर्नेतृणां क्रूरहस्तगा।
भूयांसश्चात्र नेतारः स्वार्थपुष्ट्येकतत्पराः ॥

राष्ट्रभक्तिविहीनास्ते पापैर्मार्गैर् धनार्जिनः।
राष्ट्रदृष्टिविहीना वै नित्यमन्यायवर्धिनः ॥

प्रशासनाधिकारेऽत्र नियुक्ता येऽधिकारिणः।
प्रेर्यन्ते ते बलाद् घोरे ह्यन्याये नेतृभिः सदा ॥

नेतारो निर्भयाः जाताः पटेले स्वर्गतेऽधुना।
यतमानाः स्वार्थसिद्ध्यै समभूवनन्निरङ्कुशाः ॥

जवाहरेण स्वे काले नेतृणां पापकर्मसु।
नावधातं गजेन्द्रस्य समाश्रित्य निमीलिकाम् ॥

स्वीयानामासुरीं वृत्तिं पश्यन्नास्त्रवचोखिदत्।
दुःशासनपराकाष्ठा समभूदिन्दिरा युगे ॥

सत्काराहाः व्यमान्यन्त धूर्ता उत्कर्षमागताः।
वृद्धिं गताः राष्ट्रद्रुहो ह्रासं राष्ट्रहितैषिणः ॥

दमने घातनेऽन्याये शोषणे पीडने तथा।
प्रवर्तन्ते स्म नेतारो निर्लज्जा निर्भयाः शठाः ॥

पश्चान्नीतिदृशाहीनो वृतो धूर्तैर्मदोन्मदैः।
सुलोचनोऽपि राजीवो नापश्यद्राष्ट्र संस्थितिम् ॥

तेन पश्चिमतः क्रूरा धूर्ता भारतविद्विषः।
आन्तरा भेदिनश्चैव विद्रोहं समकारयन् ॥

तेन पाञ्चनदे देशे कश्मीराख्ये च दानवाः।
उत्पातैर्विविधाकारैः प्रजापीडामकारयन् ॥

पुर

॥ारणं गोलिकाघातैः पुष्पागप्रदाहनम् ।
लुण्ठनं द्रव्यजालस्य युवतीधर्षणं तथा ॥

बालापहरणं क्रूरं यानविध्वंसनं पथि ।
हननं राष्ट्रभक्तानां पापसंवर्धनं महत् ॥

नाशनं हिन्दुतीर्थानां लज्जापहरणं तथा ।
प्रावर्तत सर्वोद्दवकं काश्मीरेषु विशेषतः ॥

भ्रष्टाचारप्रसक्तानां मंत्रिणां पतनेन हि ।
देशस्यावनतिर्नित्यं कौटिल्येन प्रकीर्तिता ॥

देशस्य येऽत्र नेतारः स्तेषां दोषैः प्रकोपितः ।
भयानका महाकालो नृत्यत्यत्र महीतले ॥

स्वधर्मपरित्यागेन दुःखमाप्नोति मानवः ।
तस्मात् सर्वैः प्रयत्नेन कार्यं धर्मस्य रक्षणम् ॥

अशान्तेः कारणं मुख्यमधर्मो जगती तले ।
तस्य नाशाय वै धर्मः सेवितव्यः सुखैषिभिः ॥

राष्ट्रघातीनि तत्त्वानि नाशं नेयानि धर्मतः ।
तेन शान्ति, सुख शर्म सम्पत् हस्ते सदा भवेत् ॥

प्रथमं हिंसका नाश्यास्ततोऽन्यायपरायणाः ।
उत्कोचग्राहिणो दण्ड्याः शासने येऽधिकारिणः ॥

अनुशासनहीनाश्च दण्डनीयाः प्रशासकाः ।
शिवं कल्याणदं योग्यं न्याय्यं स्थाप्यं प्रशासनम् ॥

राष्ट्रकाली राष्ट्रलक्ष्मी स्तथा राष्ट्रसरस्वती ।
सम्पूज्याश्चैव संवर्ध्याः राष्ट्रियैः शासकैः सदा ॥

राष्ट्रविद्रोहिणो वध्या स्तथा राष्ट्रविभाजिनः ।
भुक्तिमुक्तिप्रदं राष्ट्रं संस्थाप्यं शासनं शिवम् ॥

ततः प्रचारणीयं सज्ज्ञानमाध्यात्मिकं शिवम् ।
अनार्यं शासिते राष्ट्रे नैव तत्सफलं भवेत् ॥



न्यायानुकूलं संस्थाप्य भारते त्वार्यशासनम् ।
अनार्यजुष्टं शासितं यत्तु नार्हति प्रलोभनम् ॥

शान्तिर्भवेन्नूनं सौराज्यं नैव भविष्यति ।
अन्यायं नाशितं नूनं घोरा काली क्षमं व्रजेत् ॥

तस्मात् पूर्वोपदिष्टं यत् राष्ट्रसेवाव्रतं मया ।
तस्यानुष्ठानतो नूनं सौराज्यं सम्भविष्यति ॥

ततो नंक्ष्यन्ति विपदो नंक्ष्यन्त्यातङ्कवादिनः ।
पीडिता जनता सर्वा सुखिनी सम्भवेत्तदा ॥

ततोऽत्र भारते देशे गदनाद्यं कुशासनम् ।
तूर्णं तस्यैव नाशाय यतनीयं हि भारतैः ॥

भारतदुर्दशां श्रुत्वा स्वर्देवी मूर्च्छिताऽभवत् ।
विलोक्य तद्दशां घोरां विलपन्ती हि तत्क्षणम् ॥

सम्प्रति भारतमाता दुःखिता दिशतीह नः ।
समुत्थानाय पुत्राणां विनाशाय च दुष्कृताम् ॥

"उत्तिष्ठत जाग्रत भो प्राप्य वरान्निबोधत"
कुरुत सद्यः तत्कार्यं दुष्टदानवनाशनम् ॥

॥ इति ॥

पूर्व संस्कृत प्राध्यापक:-
1) स्नातकोत्तर संस्कृत विभाग, कश्मीर विश्वविद्यालय,
हज़रतबल, श्रीनगर, कश्मीर

## आत्म-परिचय:


नाम : बदरीनाथ कल्ला

जन्म : मार्च १९३१ मूल निवास : श्रीनगर, कश्मीर

पिता का नाम : पं० विद्लाल कल्ला

योग्यता : एम०ए०एम०ओ०एल० शास्त्री, बी०एड०, पी०एच०डी०

पद : पूर्व संस्कृत प्राध्यापक, कश्मीर विश्वविद्यालय, श्रीनगर, कश्मीर


प्रकाशित पुस्तकें :

(१) कोशुर शैवमत, प्रकाशक, कश्मीर विश्वविद्यालय, श्रीनगर।

(२) मानस-दर्पण — संपादित, प्राक्कथन—डॉ० कर्णसिंह।

(३) द्विभाषिक वार्तालाप-पुस्तिका (हिन्दी-कश्मीरी) प्रकाशक, केन्द्रीय हिन्दी निदेशालय।

(४) कश्मीरी शब्दकोश (कश्मीरी शब्दकोश के सात खण्डों में लेखक ने चालीस हज़ार शब्दों की व्युत्पत्ति (Etymology) दी है। प्रकाशक, जम्मू व कश्मीर ललित कला संस्कृति व साहित्य अकादमी, श्रीनगर, कश्मीर।

(५) त्रिभाषा कोश (हिन्दी-अंग्रेजी-कश्मीरी) का संपादक प्रकाशक, केन्द्रीय हिन्दी निदेशालय, आर०के० पुरम्, नई दिल्ली।

(६) भारतीय भाषा परिचय कोश, इसमें 'कश्मीरी भाषा' पर प्रविष्टि (Entry) प्रकाशक, केन्द्रीय हिन्दी निदेशालय, आर०के० पुरम्, नई दिल्ली।

(७) विश्व संस्कृत शताब्दी ग्रन्थः, जम्मू व कश्मीर राज्यभागः (इसमें 'अस्य शतकस्य संस्कृत विद्वांसः' इस भाग का लेखक) प्रकाशक, अखिल भारतीय संस्कृत साहित्य सम्मेलन, नई दिल्ली।

(८) संस्कृतामृतम्, दिव्यज्योतिः, भारती, संस्कृत मञ्जरी आदि संस्कृत पत्रिकाओं में संस्कृत रचनाएँ प्रकाशित।

(९) अखिल भारतीय प्राच्य विद्या परिषद्, अन्तर्राष्ट्रीय संस्कृत सम्मेलन (दिल्ली-१९७२) विश्व संस्कृत सम्मेलन, दिल्ली संस्कृत अकादमी द्वारा आयोजित सम्मेलनों में शोधात्मक लेखों का वाचन। अन्तर्राष्ट्रीय नागरी लिपि सम्मेलन, दिल्ली 1995.

(१०) हिन्दी, संस्कृत, उर्दू, कश्मीरी तथा अंग्रेज़ी भाषाओं में अनेक शोधपूर्ण लेख प्रकाशित।


वर्तमान पता : म. न. १३62 सैक्टर-१६, फरीदाबाद (हरियाणा)

57-B त्रिकूटा नगर, जम्मू

TN: 2471616


# काश्मीर-क्रन्दनम्

( जम्मू-काश्मीर राज्ये आतङ्कवाद जन्य दुःस्थिति वर्णनम् )

रचयिता

डॉ० बदरीनाथ कल्ला ( राष्ट्रपति सम्मानित )

शास्त्री, बी०एड० एम०ए० एम०ओ०एल०

पी-एच०डी० (संस्कृत-भाषाविज्ञान), साहित्याचार्य

विस्थापितः कश्मीरी पण्डितः


Professor Dr. Badrinath Kalla,
Former Sanskrit Professor,
Post Graduate Deptt. of Sanskrit,
The University of Kashmir,
Srinagar (Kashmir)


( संस्कृति संस्कृत-प्रचाराय निःशुल्क-वितरणम् )